संस्कृतविद्यासमिति-पत्रिका

# संस्कृतश्रीः

SAMSKRITASRI

A Monthly Journal of
Samskrit Education Society

தனி ப்ரதி
விலை ரூ. 4

NOVEMBER - 2019

ஸம்ஸ்க்ருதஸ்ரீ:

ஸம்ஸ்க்ருத கல்விக்
கழக மாத இதழ்
212/13-1,
செயின்ட் மேரிஸ் ரோடு,
மந்தைவெளி, சென்னை-28


सद्यःछिन्नविधेः मूर्ध्ना तन्वानो रागडम्बरम्।
जयत्येषो महायोगी भैरवो मोक्षदायकः।।

அப்போது கிள்ளிய நான்முகனின் சிரத்தினால் எங்கும் வண்ணப்பூச்சை செறிவிப்பவரும் மோக்ஷத்தை அளிப்பவரும் மஹாயோகியுமான பைரவர் வெல்கிறார்.

कालभैरवजयन्ती १९.११.२०१९

உ

☏ 24951402

# THE SAMSKRIT EDUCATION SOCIETY (Regd) MADRAS

**Old 212/13-1, New No.11, St. Mary's Road, R.A. Puram, Chennai - 600 028.**

| | | |
|---|---|---|
| Secretary & Treasurer | : | **Sri G. SITHARAMAN**, F.C.A. |
| Editor and Publisher | : | **S. SRINIVASA SARMA** |
| Associate Editor | : | **Dr. G. Sankaranarayanan**<br>Department of Sanskrit,<br>SCSVMV Univeristy, Enathur,<br>Kanchipuram, Tamilnadu<br>Cell : 99941 03957 |

---

| | | |
|---|---|---|
| 1. | ஸ்ரீமதி சாந்தா ஸ்ரீநிவாஸன், ஆழ்வார்ப்பேட்டை | 98843 12214 |
| 2. | ஸ்ரீமதி மாலதீ பாலசுப்ரமண்யம், மேடவாக்கம் | 9884158110 |
| 3. | ஸ்ரீமதி சாந்தி அசோக், மந்தைவெளி | 24951402 |
| 4. | ஸ்ரீமதி கௌரீ கருணாகரன், மைலாப்பூர், | 24320544 |
| 5. | ஸ்ரீமதி ரமாசுந்தரராஜன், சென்னை -95, | 65687635 |
| 6. | ஸ்ரீமத் பார்வதீ ராமசந்திரன் அண்ணா நகர் | 26215719 |
| 7. | ஸ்ரீ R. முத்து கிருஷ்ண ன் கொரட்டூர் | 26872430 |
| 8. | ஸ்ரீ S. ரங்கநாத சர்மா, சேலையூர் | 222917[illegible] |
| 9. | ஸ்ரீமதி புவனேச்வரீ ராஜகீழ்பாக்கம் | 98412120[illegible] |
| 10. | ஸ்ரீ K. ராஜேச்வரீ மாடம்பாக்கம் | 9962837[illegible] |
| 11. | ஸ்ரீ S. ஹரிஹரன் நங்கைநல்லூர் | 984140[illegible]9 |
| 12. | ஸ்ரீ S. அனந்தன், மதுராந்தகம் | 9894709418 |
| 13. | ஸ்ரீ P.R. சுப்ரமண்யம், ஓ.ஓ. நகர் | 23640864 |
| 14. | ஸ்ரீ R. ஸ்ரீநிவாஸகோபாலாசார்ய ஸ்ரீரங்கம் | 2430632 |
| 15. | ஸ்ரீமதி ராஜம் சுந்தர், திருநெல்வேலி | 9488326850 |
| 16. | ஸ்ரீ P.D. ஸ்ரீநிவாஸன், திருநின்றவூர் | 9445703470 |
| 17. | ஸ்ரீ R. ரங்கநாதன், காஞ்சீபுரம் | 97910 55428 |
| 18. | ஸ்ரீ C.A. ஏகாம்பரம், கோயம்புத்தூர் | 0422-2233242 |
| 19. | ஸ்ரீமதி டி.வி. ஜயலஷ்மி சர்மா, புன்குன்னம், த்ரிசூர்-680 002, | 0487-2382964 |
| 20. | ஸ்ரீமதி கௌரிவேங்கடராமன், காட்கோபர், Mumbai East | 09757115154 |

ஸ்ரீ வி. கோதண்டராமன், Mrs. கீதா ரேகா,ஆதம்பாக்கம் 9444469638.

# संस्कृतश्रीः

माला : ४१ November- 2019 पुष्पम् : ११

कलि : ५१२१ विकारी - वृश्चिकमासः ४१-११





**SUBSCRIPTION RATES**

| | |
|---|---|
| ANNUAL | : Rs. 40/- |
| LIFE SUBSCRIPTION | : Rs. 400/- |
| PAGE DONATION | : RS.200/- |

Subscription and donations may be sent in the form of crossed D.D./Drawn in favour of the Secretary and Treasurer.

**The Samskrit Education Society (Regd.),**
Old 212/13-1, St.Mary's Road,
Mandaiveli, Chennai - 600 028.
Ph: 044 - 24951402
Email: editorsamskritasri@gmail.com

# सम्पादकीयम्

**नवेढेव लज्जावशाद्व्यङ्ग्यगूढा**
**बुधानां चमत्कारमोदं दिशन्ती।**
**कवीन्द्रैः स्वकृत्याभिभूषैः लसन्ती**
**जयेत्संस्कृतश्रीः यशोदीपजुष्टा।।**

**कालः करोति पुरुषं दातारं याचितारञ्चेति** महदुक्तिः। अनन्तविभवविभ्राजितमहिमानः अशनलाभायापि कृतभूरिपरिश्रमाः कालेन भवन्ति। कपर्दिकान्वेषिणोपि जनाः कपर्दिमित्रैश्वर्यभाजो भवन्ति। अतः कालस्य महिमा अवर्णनीयः। अतः अस्माकं स्थितिः स्थिरेति भावना पूर्णतो मिथ्या। अद्यतनविभवोत्प्रेरितमनसेतरान् तृणवन्मन्यमानाः जनाः क्षुद्रानपमानाग्निना दहन्ति। तस्यैव विप्रुषः विप्लोषपोषणेनात्मानं पश्चाद्दग्धेति विस्मृत्येतरान् अभिभवन्ति। यदि कालस्य गतिः ज्ञायते शास्त्रविमृष्टा तर्हि न वा मोहः न वा गर्वः पीडयति जनम्। **आत्मवदेन परानपि पश्यतेति** काञ्चीपीठाधीशानां मूर्तीभूततपसां श्रीमच्चन्द्रशेखरेन्द्रसरस्वतीसंयमीन्द्राणां पीयूषप्रख्यं वचः वेदाञ्चलाग्रविभूषियितं सर्वथा मनसि धारणीयम्। कालस्य गतिमवगच्छता गर्वो न कार्यः। **अनुत्सेकः खलु विक्रमालङ्कार** इति ब्रूते कविकुलगुरुः। नायमुपदेशः काव्यमाधुर्यास्वादगोचरः अपि च जीवनतत्त्वविमर्शकैरप्यनुसन्धेयः। उत्सेकेन खलूद्वेजिताः इतरानवमन्यन्ते। अतः उत्सेकः सर्वात्मना त्याज्यः। तदर्थमेवोपदिशन्ति शास्त्राणि काव्यानि च तदेतन्मनसि निधाय अनुत्सेकैः सर्वानपि आत्मतुल्यान् मन्यमानैर्भाव्यमिति प्रार्थयते सम्पादकवर्गः।

## बालीप्रत्यभिज्ञानशतकम्

**Prof. ABHIRAJA RAJENDRA MISHRA**
Formerly Vice-Chancellor, Varanasi

नाम्ना तीर्थामृतं ख्यातं सुरसिन्धुप्लुवामलम्।
तीर्थोत्तमं ततो वन्दे तम्पाक्सिरिङ्नीवृति।।२१।।

मयोत्पादितमापीय विषाक्तं यत्र जीवनम्।
जीवनं किल देवानां संशयापन्नमाबभौ।।२२।।

देवसेनां मृतां दृष्ट्वा शक्तियुक्तिं विचिन्तयन्।
ततो वज्रप्रहारेण गंगामिन्द्रस्समानयत्।।२३।।

स्रोतस्तदेव पीयूषप्राणकल्पं पुरातनम्।
तीर्त-एम्पुलनाम्नैव महावाप्यां विराजते।।२४।।

तज्जलं बहिरागत्य घर्घरारावसंयुतम्।
महावेगं महादीर्घं दृश्यते ननु भैरवम्।।२५।।

नदीभूय सरत्यग्रे तदेव सलिलं पुनः।
तटस्थतीर्थसंसक्तं सान्द्रकुञ्जपथान्वितम्।।२६।।

सिद्धसिन्धुस्वरूपा सा पकेरिसानसंज्ञका।
पूततोया नदी रम्या बालीद्वीपं पुनाति वै।।२७।।

एतदेव जलं गाङ्गं धर्मसंकारपर्वणि।
पमंकुभिः पडण्डैश्च मन्दिरेषु प्रयुज्यते।।२८।।

पितानू - पकरीसाननद्योर्मध्येऽप्यवस्थितम्।
क्षेत्रं बालीपुराणेषु ख्यातं नाम्नाऽमरावती।।२९।।

साम्प्रतं द्वीपभूमीनां प्रत्यभिज्ञानमुच्यते।
विदुषां सुखबोधाय भारते दूरवर्त्तिनम्।।३०।।

उत्तरस्यां बुलेलेङ्गं बादुङ्गं दक्षिणाञ्चले।
वारुण्यां जेम्बरानं च तबानानं ततः परम्।।३१।।

ग्यान्यारं चापि पूर्वस्यां करंगासममण्डलम्।
आग्नेय्यां कुंगकुंगञ्च बांगली धूर्जटेर्दिशि।।३२।।

कमिश्नरीतिख्याताभिरेवमष्टाभिरञ्चितम्।
द्वीपं रुद्राष्टमूर्त्तित्वं साधु पुष्णाति साम्प्रतम्।।३३।।

मण्डले बांगलीनाम्नि उत्तरे तीर्त-एम्पुलात्।
स्थितं चिन्तामणिं वन्दे पुण्यसम्भारभाजनम्।।३४।।

यत्र नीलजलं रम्यं द्वितीयमिव मानसम्।
सरोवरं प्रविस्तीर्णं लक्ष्यते महदद्भुतम्।।३५।।

ज्वालामुखाद्रिसंसक्तं बाटुराङ्ग्रिसमन्वितम्।
नगानां शृंखलाभिश्च सर्वतोऽपि दृढीकृतम्।।३६।।

दक्षिणे खलु यत्तीरे ग्रामष्ट्रन्याननामकः।
शवा यत्र न दाह्यन्ते निखन्यन्तेऽथवा भुवि।।३७।।

श्मशानवृक्षमाहात्म्यान्निर्गन्धा निरुपद्रवाः।
शनैः शनैः प्रलीयन्ते प्रकृत्यैव परासवः।।३८।।

तरुन्मन्यानसंज्ञोऽसावक्षिलक्ष्यीकृतो मया।
द्रुमः प्रेतवने यस्माद् ग्रामसंज्ञा प्रवर्त्तिता।।३९।।

विचित्रां तां प्रथां द्रष्टुं प्रत्यहं कुतुकान्विताः।
यात्रिणस्तत्र गच्छन्ति विदेशेभ्यस्समागताः।।४०।।

(अनुवर्तते.....)

## அஷ்டாங்க ஹ்ருதயம்

**Prof. S. SWAMINATHAN**
Sri Jayendra Saraswathi Ayurveda College, Poonamallee

**बलिनः शीतसंरोधाद्धेमन्ते प्रबलोऽनलः ।**
**भवत्यल्पेन्धनो धातून् स पचेद्वायुनेरितः ।**
**अतो हिमेऽस्मिन्सेवेत स्वाद्वम्ललवणान्रसान् ।।**

हेमन्ते बलिनः - ஹேமந்தத்தில் பலவானாக இருக்கக்கூடிய மனிதர்களுக்கு, शीतसंरोधात् - வெளிப்புறமுள்ள மூடிபனிக் காரணமாக ஏற்படக்கூடிய குளிர்ச்சியானது தடுப்பதன் காரணமாக, अनलः प्रबलः भवति - (உடற்சூடானது வெளியேறாமல் உட்புறம் திரும்புவதால்) வயிற்றிலுள்ள பசி எனும் தீயானது வலுப்பெறுகிறது, सः अल्पेन्धनः - அது உணவினுடைய வரவு குறைந்துபோனால், वायुना ईरितः - குடல் வாயுவினால் விசிறப்பட்டு, धातून् पचेत् - உட்புற தாதுக்களை வேகவைத்துவிடுகிறது, अतः अस्मिन् हिमे - அதனால் இந்த ஹேமந்த ருதுவில் (முன்பனி காலத்தில்), स्वादु-अम्ल-लवणान् रसान् - இனிப்பு, புளிப்பு மற்றும் உப்புச் சுவை ஆகியவற்றை, सेवेत - உபயோகப் படுத்திக்கொள்ள வேண்டும்.

**விளக்கம்** - முன்பனி காலமாகிய ஹேமந்தம் எனும் பருவகாலத்தில் மூடுபனி அதிகமிருப்பதால் உடலினுடைய

தோல் பகுதியில் இந்த குளிர்ச்சி படுவதால் தோலினுடைய வியர்வைக் கோளங்கள் வழியாக வெளியேறவேண்டிய உடற்சூடானது தடுக்கப்படுவதால் அந்த உடற்சூடானது உட்புறம் திரும்புகிறது. இதனால் வயிற்றிலுள்ள ஜாடராக்னி எனும் பசித்தீயானது இந்த சூட்டினுடைய வரவால் வலுப்பெற்று கொழுந்துவிட்டு எரிகிறது. அதை அடக்குவதற்கான உணவுவகைகளாகிய இனிப்பு, புளிப்பு மற்றும் உப்புச் சுவை கொடுக்கப்படாவிட்டால் அந்த தீயானது உட்புறசேமிப்புக் கிடங்குகளில் வைக்கப்பட்டுள்ள உணவின் சத்தான அம்சங்களைச் சாப்பிடத் தொடங்குகிறது. அதனால் உடல்போஷாக்கைத் தருவதும், உடலின் சூட்டை வெளிப்புறமாகத் தள்ளுவதுமாகிய இனிப்பு, புளிப்பு மற்றும் உப்புச் சுவைகளைப் பயன்படுத்தவேண்டும்.

(अनुवर्तते.....)

## नीतिद्विषष्टिका

अतिसत्कृता अपि शठाः सहभुवमुज्झन्ति जातु न प्रकृतिम्।
शिरसा महेश्वरेणापि ननु धृतो वक्र एव शशी।। १०९

மூர்க்கர்களை எவ்வளவு உபசரித்தாலும் தமக்கு ஸஹஜமான ஸ்வபாவத்தைவிட மாட்டார்கள். சந்திர கலை ஸ்வபாவம் வளைவு. அதை ஈச்வரன் தலையில் அணிந்ததால் என்ன? வளைவு நிமிர்ந்ததா?

# रघुवंशम्

Sri. R.RANGANATHAN,
Sanskrit Education Society, Kanchipuram

## रघुवंशे द्वादशसर्गे सप्तसप्ततितमः श्लोकः

**ततो बिभेद पौलस्त्यः शक्त्या वक्षसि लक्ष्मणम्।**
**रामस्त्वनाहतोप्यासीद् विदीर्णहृदयः शुचा।।**

**पदच्छेदः**

ततो, बिभेद, पौलस्त्यः, शक्त्या, वक्षसि, लक्ष्मणम्, रामः तु, अनाहतः, अपि, आसीत्, विदीर्णहृदयः, शुचा।

**शब्दधातुरूपाणि**

ततः, तु, अपि - अव्य.

बिभेद - बिभेद बिभदतुः बिभिदुः - भिदिर् विदारणे धातोः प्र. पु. एक.

पौलस्त्यः, रामः, अनाहतः,

विदीर्णहृदयः - अका. पुं. प्र. एक।

शक्त्या - इका. स्त्री. तृ. एक।

वक्षसि - सका. नपुं. स. एक।

लक्ष्मणं - अका. पुं. द्वि. एक।

आसीत् - आसीत् आस्ताम् आसन्। अस - भुवि धातोः लङि प्र. पु. एक।

शुचा - चका. स्त्री. तृ. एक।

**प्रतिपदार्थः**

ततः - பிறகு, पौलस्त्यः - இந்திரஜித், शक्त्या - வேலினால், लक्ष्मणं - லக்ஷ்மணனை, वक्षसि - மார்பில், बिभेद - பிளந்தான்.

रामः तु - ராமரோ, अनाहतः अपि - (அவ்வாயுதத்தால்) தாக்கப்படாதவராயினும், शुचा - துக்கத்தால், विदीर्णहृदयः - பிளக்கப்பட்ட மனமுடையவராக, आसीत् - ஆனார்.

**व्याकरणविशेषः**

अनाहतः - न आहतः

विदीर्णहृदयः - विदीर्णं हृदयं यस्य सः

**कोषः**

शक्तिः - कासशामर्थ्ययोः शक्तिः।

शुक् - वैरं विरोधो विद्वेषो मुन्युशोकौ तु शुक् स्त्रियाम्।

**भावार्थः**

समरे रावणः शक्त्यायुधेन लक्ष्मणस्य हृदयं विदारयामास। तदा यद्यपि राघवस्तु आयुधेनाताडितः तथापि अनुजस्य दुःखेन स्वयमपि दुःखितहृदयः आसीत्।

(अनुवर्तते.....)

**नीतिद्विषष्टिका**

**अफलं श्राद्धमपात्रे धनमफलं यन्न दत्तमर्थिभ्यः।**
**यौवनमफलं यमिनः श्रुतमफलं दुर्विनीतस्य।। ११०**

தகுதியற்றவனுக்கு கொடுத்தால் சிராத்தம் வீண். யாசகருக்குக் கொடுக்காவிடில் பணம் வீண். ஸன்யாஸிக்கு யௌவனம் வீண். வினயமற்றவனுக்கு படிப்பு வீண்.

## मन्त्रार्थचिन्तनम् - २८ भोजनात् सर्वाङ्गस्वास्थ्यम्

**Dr. M. JAYARAMAN**
Krishnamacharya Yoga Mandiram, Chennai

**मन्त्रः**

**वाङ्म आसन् । नसोः प्राणः। अक्ष्योः चक्षुः। कर्णयोः श्रोत्रम्। बाहुवोर्बलम्। ऊरुवोरोजः। अरिष्टा विश्वान्यङ्गानि तनूः। तनुवा मे सह, नमस्ते अस्तु मा मा हिंसीः ?**

**सायणभाष्यानुसारी मन्त्रार्थः**

हे भगवन्। षड्रसम् अन्नम् आकण्ठं भुक्त्वा तृप्तस्य मे -
वागिन्द्रियम् आस्ये प्रतिष्ठितम्
नासाद्वारद्वये प्राणः प्रतिष्ठितः
अक्षिगोलके चक्षुरिन्द्रियं प्रतिष्ठितम्
कर्णशष्कुल्यां श्रोत्रेन्द्रियं प्रतिष्ठितम्
बाह्वोः बलं समुत्पन्नम्
ऊर्वोः गमनागमनार्थम् शक्तिः लब्धा
किं बहुना, सर्वाणि मम अङ्गानि प्राप्तस्वास्थ्यानि भोजनेन।
मम स्थूलशरीरेण सह लिङ्गशरीरमपि स्वस्थं जातम् ।

एवं सर्वाङ्गस्वास्थ्यं भोजनात् यत् सिद्धं तत्तु भगवतः कृपयैव। तस्मात् भोजनप्रदाय ईश्वराय नमस्काराः। इत्थमेव प्रत्यहमहम् आमरणं सुखी स्याम्। क्षुत्पिपासादिपीडां नानुभवेयम् । एषः मन्त्रार्थः।

विनियोगस्तु - परमेश्वर-कृतोपकृति-स्मृतिसिद्धये प्रतिदिनं भोजनोत्तरम् अस्य मन्त्रस्य अर्थानुसन्धानपुरस्सरं पठनं करणीयम्।

## विवरणम्

अत्यन्तं स्पष्टः मन्त्रार्थः। इतः ग्राह्याः अर्थाः -

१. भोजनोत्तरं, कार्यान्तरव्यापृतेः प्राक् अन्नदातुः परमात्मनः स्मरणं करणीयम्।

२. भोजनोत्तरं शरीरस्य स्थूलानां सूक्ष्माणां च अवयवानां स्वास्थ्यविषये चिन्तनीयम्। तदा एव स्वस्य स्वास्थ्यस्थितेः विषये मनुष्यस्य परिज्ञानं भवति।

३. यादृशेन आहारेण सर्वाङ्गस्वास्थ्यं सिद्ध्येत् तादृशः एव आहारः सेवनीयः, षड्रसोपेतः। न केवलं जिह्वाचापल्यशमनाय भोजनम्।

४. अयं मन्त्रः अर्थानुसन्धानपुरस्सरं पठनीयः इत्युक्तत्वात्, भोजनोत्तरकालिकः एषः व्यापारः 'तज्जपः तदर्थभावनम्' इति योगसूत्रगतविचारसादृश्यं, तेन च योगत्त्वं भजते।

५. किञ्च, प्राचीनाः अस्मत्पूर्वजाः कथं भोजनात् पूर्वं शरीरस्य, मनसः, इन्द्रियाणां क्षीणशक्तिकत्वम् अवलोक्य, भोजनोत्तरं तेषां परिपुष्टतां च अनुभवेन ज्ञातवन्तः इति मन्त्रेणानेन व्यज्यते। अनेन च ते जीवनस्य क्षणं क्षणमपि समनस्काः भूत्वा जीवितवन्तः इति ज्ञायते। न हि प्राचीनाः आर्षपरम्परागताः केवलं परलोकपराः। निजशरीरस्य विषये 'कुशलान्न प्रमदितव्यम्' इत्युक्तप्रकारेण सावधाना अपि इत्यलमतिविस्तरेण।

(अनुवर्तते.....)

# संस्कृतश्लोकानुरूपः
# तिरुक्कुरल्

### 108. கயமை- क्षुद्रता

श्रीकलियन् रामानुजजीयर् (भूतपूर्वः),
नाङ्गुनेरि

மக்களே போல்வர் கயவர் அவரன்ன
ஒப்பாரி யாங்கண்டது இல்.

सदृशा निर्गुणाः क्षुद्रा अपि सद्भिः स्वदेहतः।
मनुष्येतरवर्गेषु नेक्ष्यते साम्यमीदृशम्।।

நன்றறி வாரிற் கயவர் திருவுடையர்
நெஞ்சத்து அவலம் இலர்.

स्वहिताभिज्ञसद्भ्योऽपि श्रेयांसः क्षुल्लका जनाः।
यतस्तेषां मनस्स्वत्र चिन्ता कापि भवेन्न हि।।

தேவர் அனையர் கயவர் அவருந்தாம்
மேவன செய்தொழுக லான்.

अपि क्षुद्रजना देवैः समानास्स्युर्यतो भुवि।
स्वेच्छानुसारं कर्माणि कुर्वन्त्येतेऽपि देववत्।।

அகப்பட்டி ஆவாரைக் காணின் அவரின்
மிகப்பட்டுச் செம்மாக்கும் கீழ்.

गुणहीनाः क्षुद्रजना यदि क्षोदीयसः स्वतः।
पश्यन्ति तर्हि स्वोत्कर्षं मत्वा दृप्यन्ति ते भृशम्।।

அச்சமே கீழ்களது ஆசாரம் எச்சம்
அவாஉண்டேல் உண்டாம் சிறிது.

क्षुद्रेष्वपि सदाचारः कदाचन यदीक्ष्यते।
राजदण्डभयं स्वेष्टवस्तुलाभश्च कारणम्।।

அறைபறை அன்னர் கயவர்தாம் கேட்ட
மறைபிறர்க்கு உய்த்துரைக்க லான்.

गुणहीना नीचजना घुष्यद्भेरीनिभा भुवि।
यत्ते पररहस्यानां प्रचारणविचक्षणाः।।

ஈர்ங்கை விதிரார் கயவர் கொடிறுடைக்கும்
கூன்கைய ரல்லா தவர்க்கு.

क्षुद्रा उच्छिष्टसंलिप्तं न क्षिपेयुः स्वकं करम्।
स्वतालुत्रोटने दक्षहस्तेभ्योऽन्यान्नरान् प्रति।।

சொல்லப் பயன்படுவர் சான்றோர் கரும்புபோல்
கொல்லப் பயன்படும் கீழ்.

दीनानामुपकुर्युस्तद्वाचं श्रुत्वैव सज्जनाः।
नीचास्संहननादिक्षुदण्डवत्फलदायकाः।।

உடுப்பதூஉம் உண்பதூஉம் காணின் பிறர்மேல்
வடுக்காண வற்றாகும் கீழ்.

दुकूलधारणं दृष्ट्वा रुचिमद्भोजनं तथा।
परेषां दूषणे सक्ता भवेयुः क्षुल्लका जनाः।।

எற்றிற் குரியர் கயவரொன்று உற்றக்கால்
விற்றற்கு உரியர் விரைந்து.

यद्यापदापतेत्स्वेषां तर्हि क्षुद्रजना भृशम्।
सज्जाः स्वानपि विक्रेतुं क्रयेतान्यत्किमत्र तैः।।

अर्थकाण्डं परिसमाप्तम् - பொருட்பால் நிறைவுற்றது.

## रूपकावली - गर्वभङ्गः

**Prof. VISHNU POTTY. V.S.**
Kanchipuram

**तेजः** कस्तव सारः ?

**अग्निः** शक्तोऽस्मि सर्वं प्रपञ्चमेकेनैव निमेषेण स्वतेजसा प्रदग्धुम्।

**तेजः** तर्हि दहस्वेदम्। नो चेत्प्रतिनिवर्तस्व।
(तृणशकलं पतति)

**अग्निः** तथा करवाणि।

**पाषाणो वापि लोहो वा मृदु वा कठिनञ्च वा।**
**यदिदं पृथिव्यां किञ्च दहेयं स्वस्य तेजसा।।**

महाजवेन तृणं दग्धुं प्रयतते। अशक्तः विषण्णो भवति।

**सर्वभक्षकभूतस्य तेजो मम कुतो गतम्।**
**अशक्तोऽस्म्यहमल्पस्य तृणस्यापि विशोषणे।।**

(तूष्णीमधोमुखः प्रतिनिवर्तते)

**अग्निः** देवानुपागम्य भो देवाः। पराजितवानस्मि। इदं तेजः किमिति ज्ञातुमशक्तोऽस्मि

**सर्वे देवाः** तर्हि महारयं वायुं प्रार्थयामहे। (वायुं कथयन्ति)
वायो ! कृपया किमिदं तेज इति विदित्वा कथयन्तु। दूरीकरोतु भयमस्माकम्।

**वायुः** **उत्तोलयामि सततं वनवृक्षजालम्**
**सप्तैव वा कुलगिरीन्निजहस्तशक्त्या।**
**किम्वा न शक्यमिह सर्वजगत्स्थितेषु**
**मे वस्तुषु प्रथितसर्वरयस्य किञ्चित्।। १०**

अहं तावन्निजशक्त्या ज्ञात्वा किमिदं तेज इति कथयामि।

मा भयं कार्ष्ट।

अग्रे चरन् तेजसः पुरतो गत्वा अक्ष्युन्मीलनासमर्थः अधोमुखः हस्ताभ्यां मुखमाच्छाद्य तिष्ठति

**तेजः** कोऽसि?

**वायुः** वायुर्नामकोऽहम्। देवेषु शक्तिमत्स्वन्यतमः। मातरिश्वा इत्यपरं मम नाम।

**तेजः** तव कः सारः?

**वायुः** स्वशक्त्या पादपान् महतोऽप्युत्पाटयामि। पर्वतानुत्तोलयामि। समुद्रं विक्षोभयामि।

**तेजः** तृणाग्रं पातयित्वा एवं तर्हीदमादत्स्व। विचाल्यान्यत्र स्थापय। नो चेत्प्रतिनिवर्तस्व।

**वायुः** एवं करवाणि।

**तृणाग्रं दर्शयन्नग्रे मम वेगपरीक्षणम्।**
**करोति मूर्खता नास्ति लोकेऽस्याः परा ध्रुवम्।**

तृणाग्रं विचालयितुं सर्वरयेन प्रयतते। अशक्तः लज्जितः अवनतमुखः तूष्णीं प्रतिनिवर्तते।

**सर्वे देवाः** भो वायो। किं ज्ञातं भवता किमिदं तेज इति। शीघ्रं कथयतु।

**वायुः** अपगतदर्पः लज्जितस्तिष्ठामि।

**सर्वे देवाः** तर्हि सर्वशक्तोऽस्मत्स्वामी इन्द्रो गच्छत्विदानीम्। प्रार्थयामहे तमेव। भो आर्य सर्वशक्त। परित्रायध्वम्। परित्रायध्वम्। कृपया किमिदं तेजोरूपमिति ज्ञात्वा अस्मात्सङ्कटादस्मान् रक्षन्तु।

(अनुवर्तते.....)

## यमकरत्नाकरः एका विहङ्गमदृष्टिः

**Dr.V.SOWMYANARAYANAN,**
Assistant Professor & Head, Dept., of Sanskrit,
D.G.Vaishnav College, Arumbakkam, Chennai 600 106.

निगमान्तदेशिकैः यादवाभ्युदये समग्रः षष्ठः सर्गः

**सहसा सहसार्थैर्या तरसेतरसेवनम्।**

**तनुतात नुताद्वज्री नगतो न गतोऽर्च्यताम्।।**

अत्र इन्द्रं मा नमेयुः इति नन्दगोपं प्रति श्रीकृष्णवचनम्।

दयाशतके -

**मृदुहृदये दये मृदितकामहिते महिते।।**

वैराग्यपञ्चके - धनमिति पदस्यावर्तनं एकादशवारमुपयुज्य

**शरीरपतनावधि प्रभुनिषेवणापादनात्**

**अबिन्धन धनञ्जय प्रशमदं धनं दन्धनम्।**

**धनञ्जय विवर्धनं धनमुदूढ गोवर्धनं**

**सुसाधनमबाधनं सुमनसां समाराधनम्।।**

इति यमकालङ्कारैः बहवः श्लोकाः यमिताः इति स्थालीपुलाकन्ययायेन किञ्चित् सूचितम्।।

**समापनम्:-**

**ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धनम्।**

**शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः।।**

इत्युक्त्वा आनन्दवर्धनः शृङ्गारकाव्ये यमकनिबन्धनं नाभिनन्दति। कवेः कर्म काव्यम्। कविः क्रान्तदर्शी। निरङ्कुशाः

कवयः। अतः आनन्दवर्धनो वा तदनुयायी आचार्यमम्मटो वा यः कोऽपि वा भवतु, तैस्सर्वैः

**काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवत् ।**
**उत्सवः सुधियामेव हन्त दुर्मेधसां नृणाम् ।।**

इति भामहवचनमत्रानुसन्धेयम् ।

कालिदाससमकालीनो घटखर्पराख्यः कविःस्वस्मिन् घटखर्परसन्देशकाव्ये - भावानुरक्तवनितासुरतैः शपेयं आलम्ब्य चाम्बुतृषितः करकोशपेयम्।

**जीयेय येन कविना यमकैः परेण तस्मै वहेयमुदकं घटखर्परेण।।** इति शपथं कृतवान्। यमकरत्नाकरकर्ता श्रीकूरत्ताळ्वान् १०११ श्लोकान् यमकैः यमित्वा तच्छपथं भग्नं कृतवान्।।

अतः शब्दालङ्काररचनेन श्रवणेन पठनेन अस्माकं व्याकरणज्ञानं वर्धते इति समापयामि ।

## नीतिद्विषष्टिका

**निर्गुणमप्यनुरक्तं प्रायो न समाश्रितं जहति सन्तः।**
**सहवृद्धिक्षयभाजं वहति शशाङ्कः कलङ्कमपि।। ११**

**குணமில்லாதவனாக இருந்தாலும் பெரியோர்கள் தன்னை அண்டியவனைக் கைவிட மாட்டார்கள். சந்திரன் தன்னுடன் கூடவே விருத்தி க்ஷயத்தை அனுபவிக்கும் களங்கத்தை விடுகிறானா?**

# योगरहस्यम् - २७

**Prof. S. VENUGOPALAN**
SJSACH, Nazarathpet, Chennai

मन्दिरेषु यथा आवरकाणि विभिन्नानि भवन्ति, अर्धमण्डप, महामण्डपादिसंज्ञकानि येषु विभिन्नकार्याणि क्रियन्ते, विशिष्टाः केचित् एव अन्तः अनुमन्यन्ते च, यथैव अस्माकं शरीरेऽपि करचरणाद्यवयवाः उरःप्रदेशः हृदयम् इति विभिन्नाः विशिष्टेषु कार्येषु विभिन्नरीत्या व्याप्रियमाणाः मुख्यामुख्यतां भजन्ते तथैव अत्रापि प्रामुख्यविषये तारतम्यं वर्तते एव। करचरणादयोऽवयवाः देहयात्रायामविनाभाविन एव। अथापि तन्नाशेऽपि प्राणहानिः तु न भवति। अतः करचरणादीनामपेक्षया उरः प्रदेशस्य मुख्यत्वम्। तत्रापि समस्तस्य उरःप्रदेशस्य अपेक्षया हृदयस्थानं मुख्यतरं भवति। तत्रापि हृदये प्राणाः अतिमुख्यतमाः भवन्ति। यैर्विना 'जीवति' इति व्यवहारस्यैव नाशः सम्पद्येत, तथैव शास्त्रेऽस्मिन् योगाभ्यासविषये यमादिपञ्चावयवाः धारणाध्यानसमाधीनां त्रयाणां दृष्ट्या बहिरङ्गाः। तथैव सम्प्रज्ञातसमाधिं प्रति धारणादित्रयं बहिरङ्गम्। एवमेव असम्प्रज्ञातसमाधिं प्रति सम्प्रज्ञातोपि बहिरङ्गः एव। एवञ्च अन्तरङ्गबहिरङ्गविचारः सर्वत्र शास्त्रेषु क्रियते एव। तथा क्रियमाणे एव प्रधानतत्त्वस्य प्राधान्यं स्पष्टं ज्ञातुं शक्यते। तथा च निर्बीजः समाधिः इत्युच्यते। सः कीदृशः? निर्बीजस्य तन्नाम निरालम्बनस्य असंप्रज्ञातापरपर्यायस्य समाधेः एव सर्वान्तरङ्गत्वमुच्यते। तत्र तथ्यम् एवमस्ति, विवेकख्यातिपरवैराग्यद्वारा परम्परया एव निर्बीजसमाधेः हेतुत्वेन, तस्य जन्मान्तरीयेन अपि धारणादित्रयेण सम्भवात् धारणादिसम्प्रज्ञातान्तानां त्रयाणां बहिरङ्गत्वम्। तदपेक्षया

अङ्गिनः निर्बीजस्य निर्विषयत्वेन धारणादीनां त्रयाणां सविषयत्वेन समानविषयत्वाभावात् पार्थक्यदर्शनात् च। अतः व्युत्थानरूपस्य त्रयस्य सम्प्रज्ञातपरिपाकप्रसादरूपपरवैराग्यद्वारा निरोधे सति सम्प्रज्ञातस्यापि निरोधात् निर्बीजः सः सम्भवति। पारम्पर्येणोपकार-कत्वात् ते धारणादयः त्रयः बहिरङ्गतां भजन्ते। ततो व्यतिरिक्ततया निर्विषयत्वेन वर्तमानत्वात् असम्प्रज्ञातः अन्तरङ्गतां भजते। विजातीयत्वेऽपि सम्प्रज्ञातप्रज्ञोत्पादनद्वारा उपक्रियते इत्यतः उपकार्युपकारकभावः अत्र अन्तरङ्गत्वबहिरङ्गत्वविर्णये अस्मभ्यं सहकरोति। असम्प्रज्ञातस्य उपकारित्वं पूर्वमपि समाधिपादे **श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वकः इतरेषाम्** इति सूत्रेण निरूपितं सूत्रकारैः।

इतः परं योगाभ्यासवशात् प्राप्स्यमानानां सिद्धीनां विषये विवक्षुः भगवान् पतञ्जलिः संयमः इत्युच्यमानस्य धारणाध्यान-समाधिरूपत्रिकस्य विषयपरिशुद्धिं कर्तुं प्रवर्तमानः तत्सम्बन्धि परिणामत्रयं वक्ष्यति अग्रे। तथा च सिद्धयः अणिमादयः अष्टौ सन्ति। आसां विभूतिः इति संज्ञा, ऐश्वर्यम् इत्यपि उच्यते। **विभूतिर्भूतिरैश्वर्यम् अणिमादिकम् अष्टधा** इति अमरकोशवाक्यम् प्रसिद्धम्। आसां सिद्धीनां प्राप्तौ चित्तस्य महत्कार्यम् अस्ति। तथा च चित्तस्य त्रिविधः परिणामः सम्भवति निर्बीजसमाधेः प्राप्तौ। ते च परिणामाः निरोध, समाधि, एकाग्रता रूपेणैव त्रेधा विभज्यन्ते। तत्र आदौ निरोधपरिणामः निरूपणीयः यथाक्रमं प्राप्तकालश्च। अतः तद्विषये अधुना परिशील्यते। चित्तस्य पञ्च भूमयः प्रसिद्धाः, क्षिप्त,

मूढ, विक्षिप्त, एकाग्र, निरोधा इति ताः भूमयः। तत्र रजसा अत्यन्तं चलं चित्तं क्षिप्तमिति भूमौ पतति, सा दैत्यानां स्थितिः। तमसा निद्रादिमत् चित्तम् मूढमुच्यते। तत्तु रक्षसाम्। क्षिप्तात् विशिष्टं विक्षिप्तं देवादीनाम्। तच्च रजस्तमसोः प्रभावात् सत्त्वात् पतनं यद्देवानां तत्। अत एव देवा अपि क्वचित् स्वस्थानात् भ्रष्टाः ऋषिमुनीनां शापभाजः भवन्ति। ते क्वचित् चित्तस्य स्थैर्यमप्याप्नुवन्ति, क्वचित् रजस्तमोभ्यां प्रभाविता अपि चित्तचाञ्चल्यमनुभवन्ति। अहल्यायाम् इन्द्रस्य व्यवहारः तादृशः एव। सत्त्वप्रधाने एकाग्रे तु एकविषयस्थिते चित्ते रजस्तमोवृत्तिनिरोधः सात्त्विकवृत्तिविशेषः यः सः सम्प्रज्ञातयोगः भवति। योगिनाम् अभ्यासवतां प्रारम्भिकी स्थितिरियम्। तेन शब्दानुमानाभ्यां परोक्षत्वेन ज्ञातार्थः साक्षात्क्रियते। साक्षात्कारात् अविद्यादिक्लेशक्षयः। ततः पुण्यपापकर्मणां दाहः, ततोऽसम्प्रज्ञातो योगः। तत्र सात्त्विकवृत्तेरपि निरोधः संस्कारमात्रशेषे निरुद्धे चित्ते भवति। एवं पञ्च भूमयः चित्तस्य प्रसिद्धाः। उत्तमाः योगिनः पञ्चम्यां भूमौ सुखोपविष्टाः ब्रह्मानन्दं कैवल्यम् अनुभवन्ति।

(अनुवर्तते.....)

## नीतिद्विषष्टिका

**परमर्मघट्टनादौ खलस्य यत्कौशलं न तत्साधोः।**
**छिद्रं करोति सूची तथा पिधत्ते सदा तन्तुः।। ११२**

**பிறர் மர்மத்தைப் பிளப்பதில் துஷ்டருக்கு என்ன சாமர்த்தியமோ அது ஸாதுவுக்கு இல்லை. பாருங்கள் ஊசி ஓட்டை செய்கிறது. நூல் எப்போதும் ஓட்டையை அடைக்கிறது.**

# कलिकल्मषघ्नं श्रीकृष्णचरितम् - ४

## (वसुदेववचनेन देवक्याः वधोद्योगात्कंसस्य निवृत्तिः, देवकीपुत्राणां कंसकर्तृको वधश्च)

**Dr. M. VINOTH**
French Institute of Pondicherry,

इत्थं प्रथमेऽध्याये भगवतः श्रीकृष्णस्य अवतरोपक्रमं वर्णयित्वा द्वितीयसर्गे भगवतः देवक्याः गर्भानुप्रवेशः, ब्रह्मादिदेवैः कृतं तदीयं स्तवनं, देवक्याः सान्त्वनञ्च वर्णयति भगवान् व्यासः। शुकब्रह्म महाराजं परीक्षितं प्रोवाच - खलः कंसः स्वराज्यशासनावसरे प्रलम्ब-बक-चाणूर-तृणावर्त-महाशन-मुष्टिक-अरिष्ट-द्विविद-पूतना-केशि-धेनुकादिभिः असुरैः बाणनरकादिभिः असुरराड्भिः सह भूत्वा बलिष्ठेन जरासन्धेन च संश्रित्य यादवानां कृते उपद्रवं चकार। यादवा अपि तेन दुष्टेन कंसेन पीडितास्सन्तः स्वपुरीं त्यक्त्वा कुरुक्षेत्रं, पाञ्चालं, केकयं, शाल्वं, विदर्भं, निषधं, विदेहं, कोसलञ्च राज्यं ययुः। केचन बान्धवाश्च तमेव दुष्टम् अनुरुन्धानाः तत्रैव बभूवुः। एवम् औग्रसेनिना दुष्टेन कंसेन देवक्याः षट्सु बालेषु हतेषु विष्णोरंशः अनन्तः तस्याः देवक्याः हर्षशोकविवर्धनः सप्तमगर्भत्वेन बभूव इति। अत्र अवधेयांशः कश्चन वर्तते - हर्षशोकविवर्धन इति विशेषणं किमर्थमिति चेत् - कंसभयात् शोकः, श्रीभगवत्कलासंबन्धात् पुत्रो भविष्यतीति हर्ष इति शोकम् एधयन् हर्षञ्च समेधयन् गर्भत्वेन बभूव इति कथयितुं तादृशं विशेषणं प्रदत्तमस्ति।

किञ्च उवाच शुकब्रह्म - तदा गर्भाधानकाले समस्तजगताम् अन्तरात्मा भगवानपि परमपुरुषमेव नाथत्वेन भजमानानां यदूनां

कंसजं भयं विदित्वा स्वीयां योगमायामेवं समादिशत् - देवि, भद्रे, त्वं गोपैः गोभिश्च अलङ्कृतं व्रजं नन्दगोकुलं गच्छ। तत्र नन्दगोकुले वसुदेवस्य भार्या रोहिणी आस्ते। अन्याश्च तस्य भार्याः कंसभयात् तत्र तत्र अलक्ष्यस्थानेषु वसन्ति। भवती देवक्याः गर्भे शेषाख्यं मम धाम यद् वर्तते तत्संनिकृष्य रोहिण्याः उदरे संनिवेशय। अनन्तरम् अहमेव परिपूर्णरूपेण देवक्याः पुत्रतां प्राप्स्यामि। त्वञ्च यशोदायां भविष्यसि। किञ्च मनुष्याः सर्वकामवरप्रदां सर्वकामवरेश्वरीं त्वां धूपोपहारबलिभिः अर्चिष्यन्ति। अपि च भवत्याः स्थानानि नाम आलयान् करिष्यन्ति। एवं दुर्गा, भद्रकाली, विजया, वैष्णवी, कुमुदा, चण्डिका, कृष्णा, माधवी, कन्यका, माया, नारायणी, ईशानी, शारदा, अम्बिका इत्यमीभिः नामभिः त्वां भजन्ते। यं च गर्भात् सङ्कर्षयति तं त्वद्विकर्षणेन सङ्कर्षणमिति, लोकरमणाद् राममिति, बलाधिक्याद् बलमिति च वक्ष्यन्ति इति। एवं भगवता सन्दिष्टा सा योगमाया तथा इति ओमिति च भगवद्वचः प्रतिगृह्य भगवन्तं प्रदक्षिणीकृत्य च पृथिवीं गत्वा यथा भगवता उक्तं तथा अकरोत्।

ततः योगमायया रोहिणीं प्रति देवक्याः गर्भे प्रणीते सति जनाः - अहो देवक्याः गर्भः विभ्रष्ट इति वास्तवम् अविदन्तः रुरुदुः। ततः भक्तानाम् अभयङ्करः भगवान् देवानामंशत्वेन जातस्य आनकदुन्दुभेः मनः सङ्कल्पज्ञानेन आविवेश। सः वसुदेवः भगवत्संबन्धि तेजः बिभ्राणः, यथा रविः तथा भ्राजमानः, इत्थन्तया अभिसंहितम् अशक्येन तेजसा युक्तः भूतानां दुर्धर्षो बभूव। ततः सा

देवकी यस्माज्जगतां मङ्गलं स्यात् तादृशम् अच्युतांशं, सर्वेषाम् आत्मनाम् आत्मभूतं भगवन्तं स्वगर्भे दधार। तत्कथमासीदिति एकं दृष्टान्तं कथयति - यथा प्राची दिक् आनन्दकरं चन्द्रं बिभर्ति तद्वदिति। अत्र वसुदेवस्य अपत्यत्वसिद्धये आदौ वसुदेवहृद्गतः पश्चाद् देवकीजठरं प्रविवेश इति ज्ञेयम्। सा देवकी सर्वजगदाधारभूतस्य भगवतः निवासभूता सती अपि नितरां न रराज। तत्र उपमया कारणं कथयति - यथा वेदविरुद्धज्ञानेन मूर्खे पुंसि सती निर्दुष्टा सरस्वती न राजते तद्वत् कंसस्य गृहे अवरुद्धा अग्नेः शिखा इव न रराज इति। स्वप्रभया दिगन्तराणि जिता यया तां, भवनं विरोचयन्तीं, शुचिस्मितां, देवकीं वीक्ष्य कंसः आह - एषः (गर्भः) मम प्राणहरः हरिः देवक्याः जठरं नूनं श्रितः (स्यात्)। यतः पुरा इयं देवकी एवंविधया प्रभया नासीत्। देवानां कार्यप्रधानः अयं हरिः मम विक्रमं यथा न निहन्ति तथा अस्मिन् हरिविषयेऽधुना मया आशु किं करणीयम् ? यदि एनां हन्मि तर्हि अवश्यं तत्कार्यं मम यशः, श्रियम्, अनुकूलमायुश्च हन्ति। यतः स्त्रीत्वात्, तत्रापि गर्भिणीत्वात्, तत्रापि गुरुतरगर्भिणीत्वात्। यः तादृशीं गर्भिणीं हन्ति सः जीवन्नपि मृतप्रायः। अपि च यः देहमेव आत्मानं मत्वा क्रूरचेष्टितेन वर्तेत तस्मिन् मृते सति तं मनुजाः शपन्ति। सः नूनं नरकं गमिष्यति इत्येवं बहुविधं विचिन्त्य तां हन्तुं समर्थोऽपि ततः निवृत्तः सन् तस्य हरेः जन्म प्रतीक्षमाणः द्वेषाविच्छेदं कुर्वन् आस्ते।। (द्वितीयाध्यायः - श्लोकाः १ - २३)

(अनुवर्तते.....)

# त्रिविधमौषधम् - १४

Sri.S.BALASUBRAMANIAN
Ms. B. RENGA PADMINI
IV BAMS, Sri Jayendra Saraswathi Ayurveda College, Chennai

**पूर्वकर्मसु मन्त्रप्रयोगः**

उक्तं हि सुश्रुतसूत्रे - **ततः प्रशस्तेषु तिथिकरणमुहूर्तनक्षत्रेषु.........विप्रान् भिषजश्चार्चयित्वा कृतबलिमङ्गलस्वस्तिवाचनं शस्त्रपदमुक्तम्। (सु.सू.५/७)** बलिः पूजोपहारः,मङ्गलं गीतादि, स्वस्तिकावाचनमाशीर्वादोच्चरणम् च भवन्ति ।पूर्वकर्म प्रधानकर्मणः सम्यक् फलं प्रप्तुं इच्छया करणीयम्। पूर्वकर्म विना व्याधिचिकित्सितं न साध्यं भवति।

**पश्चात्कर्मणि मन्त्रप्रयोगः**

पश्चात्कर्मसु मन्त्राणां प्रयोगं बहुः मुख्यतमः भवति। किमर्थम्? आतुरस्य रक्षणा- तथा दीर्घमायुः प्राप्तुम् इच्छया च। सुश्रुतसूत्रे उक्तं

**एतैर्वेदात्मकैर्मन्त्रैः कृत्याव्याधिविनाशनैः।**
**मयैवं कृतरक्षस्त्वं दीर्घमायुरवाप्नुहि।। (सु.सू.५/३३)**

उदककुम्भे जलं गृहीत्वा अधः उक्तं मन्त्रमुच्चरित्वा आतुरं प्रोक्षयेद्भिषक्।

**कृत्यानां प्रतिघातार्थं तथा रक्षोभयस्य च ।**
**रक्षाकर्म करिष्यामि ब्रह्मा तदनुमन्यताम् ।।**
**नागाः पिशाचा गन्धर्वाः पितरो यक्षराक्षसाः ।**
**अभिद्रवन्ति ये ये त्वां ब्रह्माद्या घ्नन्तु तान् सदा ।।**
**पृथिव्यामन्तरीक्षे च ये चरन्ति निशाचराः ।**
**दिक्षु वास्तुनिवासाश्च पान्तु त्वां ते नमस्कृताः ।।**
**पान्तु त्वां मुनयो ब्राह्मया दिव्या राजर्षयस्तथा ।**
**पर्वताश्चैव नद्यश्च सर्वाः सर्वे च सागराः ।।**

अग्नी रक्षतु ते जिह्वां प्राणान् वायुस्तथैव च ।
सोमो व्यानमपानं ते पर्जन्यः परिरक्षतु ।।
उदानं विद्युतः पान्तु समानं स्तनयित्नवः ।
बलमिन्द्रो बलपतिर्मनुर्मन्ये मतिं तथा ।।
कामांस्ते पान्तु गन्धर्वाः सत्त्वमिन्द्रोऽभिरक्षतु ।
प्रज्ञां ते वरुणो राजा समुद्रो नाभिमण्डलम् ।।
चक्षुः सूर्यो दिशः श्रोत्रे चन्द्रमाः पातु ते मनः ।
नक्षत्राणि सदा रूपं छायां पान्तु निशास्तव ।।
रेतस्त्वाप्याययन्त्वापो रोमाण्योषधयस्तथा ।
आकाशं खानि ते पान्तु देहं तव वसुन्धरा ।।
वैश्वानरः शिरः पातु विष्णुस्तव पराक्रमम् ।
पौरुषं पुरुषश्रेष्ठो ब्रह्माऽऽत्मानं ध्रुवो भ्रुवौ ।।
एता देहे विशेषेण तव नित्या हि देवताः ।
एतास्त्वां सततं पान्तु दीर्घमायुरवाप्नुहि ।।
स्वस्ति ते भगवान् ब्रह्मा स्वस्ति देवाश्च कुर्वताम् ।
(स्वस्ति ते चन्द्रसूर्यौ च स्वस्ति नारदपर्वतौ) ।
स्वस्त्यग्निश्चैव वायुश्च स्वस्ति देवाः सहेन्द्रगाः ।।
पितामहकृता रक्षा स्वस्त्यायुर्वर्धतां तव ।
ईतयस्ते प्रशाम्यन्तु सदा भव गतव्यथः ।।

इति स्वाहा । (सु.सू.५/१९-३३)

**रक्षकर्म कृतमातुरमागारं प्रवेश्य।**

व्रणादारभ्य अर्शांसि पर्यन्तम् अनेकशल्यतन्त्रसाध्यव्याधीनां एतेषां मन्त्राणां प्रयोगा अवश्यं करणीयाः। शल्यतन्त्रेषु मन्त्राणां मुख्यत्वं इह प्रस्तुतौ वयं दृष्टवन्तः। अग्रिमप्रस्तुतौ अगदतन्त्रे मन्त्राणां प्रयोगं पश्यामः।

(अनुवर्तते.....)

# शास्त्रं ज्योतिः प्रकाशार्थम् - ११

**Ms. DHWANI J.**
IV BAMS, Sri Jayendra Saraswathi Ayurveda College,
Chennai

रोगवशाद्यदा प्राणिनः श्लेष्मा (कफः) क्षीयते, अनिलो (वाताख्यदोषः) वा प्रबलो भवति, यदा वा प्राणिनः मनःशरीरासन्तापः भवति, तदा निद्रा नैव प्रभवति, सेयं निद्रा या न भवति, सा वैकारिकी उच्यते। एवं तामसी, स्वाभाविकी, वैकारिकी इति निद्रा त्रिधोच्यते। सर्वत्रापि निद्रोत्पत्तौ तमः एव कारणमुक्तम्। ये तु प्रकृत्या सात्त्विकाः, तेषां निद्रा स्वल्पा एव भवति, प्रकृत्या तामसिकानां च अत्यधिका। अतश्चाप्युच्यते -

**निद्राहेतुस्तमः सत्त्वं बोधने हेतुरुच्यते।**
**स्वभाव एव वा हेतुर्गरीयान् परिकीर्त्यते।।**

(सुश्रुतसंहिता - शारीरस्थानम् - ४)

ये जनाः अतिनिद्रया पीडिता सन्ति, ते तमोगुणहरणे सत्त्वगुणवर्धने च यतेरन्निति प्रतर्क्यते। चरकाचार्येण निद्रा इत्थं विभज्यते-

**तमोभवा श्लेष्मसमुद्भवा च मनःशरीरश्रमसम्भवा च।**
**आगन्तुकी व्याध्यनुवर्तिनी च रात्रिस्वभावप्रभवा च निद्रा।।**

**रात्रिस्वभावप्रभवा मता या तां भूतधात्रीं प्रवदन्ति तज्ज्ञाः।**
**तमोभवामाहुरघस्य मूलं शेषाः पुनर्व्याधिषु निर्दिशन्ति।।**

(चरकसंहिता - सूत्रस्थानम् - २१)

तमोभवा, श्लेष्मसमुद्भवा, मनःश्रमसम्भवा, शरीरश्रमसम्भवा, आगन्तुकी, व्याध्यनुवर्तिनी, रात्रिस्वभावप्रभवा इति सप्तविधनिद्रोच्यते।

तमोभवा इति तमोगुणोद्रेकभवा सैषा अघस्य पापस्य मूलमित्युक्तम्। तमःप्रधानो हि प्राणी निद्रासंबद्धं सद्वृत्तं न शीलयतीति कृत्वा, अधर्मकारणभूतेयं निद्रा उक्ता। मनःशरीरश्रमसम्भवा तु निद्रा मनःशरीरयोः क्रियोपरमत्वात् संभूयमाना उच्यते। एषास्माभिः पूर्वमपि चर्चिता, अत्रैव प्रत्येकमपि इन्द्रियं स्वस्वविषयग्रहणे असमर्थं भवतीत्यतः निद्रा प्रादुर्भवति। आगन्तुकी रिष्टभूता उच्यते। सैषा न प्राकृता निद्रा भवति, अपि तु मृत्युबोधिका एव। व्याध्यनुवर्तिनी रोगप्रभवा। रात्रिस्वभावप्रभवा रात्र्याः प्राकृतत्वेन निद्रोत्पाकत्वादुत्पद्यमाना। आसु निद्रासु रात्रिस्वभावप्रभवा भूतधात्री उच्यते। भूतानि प्राणिनो दधाति पुष्णातीति भूतधात्री, धात्रीव धात्री (आयुर्वेददीपिका)। ननु पूर्वमेवास्माभिः निद्रायाः साधुत्वं निरूपितम्। यथावत्सेवितया निद्रया सुखपुष्टिबलवृषत्व-ज्ञानजीवितप्राप्तिर्भवतीति च चर्चितं गतमासे। एभिः सुखादिभावैः निद्रा प्राणिनः प्रीणयतीति ज्ञातमेव, किन्तु सप्तस्वासु निद्रासु का इयं प्रीणनकारिका इति चेत्, रात्रिस्वभावप्रभवा एवेति निगम्यते।

अधुना, सुष्ठु निद्रापालनविषये विचार्यते। सत्यमेव यथोचितनिद्रया सर्वमारोग्यं प्राप्यते। अतोऽन्यथा तु शरीरमनसोः दुःखमेव जायते। उच्यते

**अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता।**
**सुखायुषी परा कुर्यात्कालरात्रिरिवापरा।।**

(अष्टाङ्गहृदयम् - सूत्रस्थानम् - ७)

अकाले निषेविता निद्रा इति वक्तव्ये, तत्र दिवास्वपनं रात्रिजागरणमिति द्वयमप्येतद्युज्यते। सर्वथा अपि रात्रिजागरणदिवास्वपने निन्दिते इत्युच्यमाने सत्यपि, कासुचिदवस्थासु एते न गर्हिते। तदत्रादौ विचारयामः।

**दिवास्वप्ननिर्देशः**

ग्रीष्मे वायुचयादानरौक्ष्यरात्र्यल्पभावतः।
दिवास्वप्नो हितोऽन्यस्मिन् कफपित्तकरो हि सः।।
मुक्त्वा तु भाष्ययानाध्वमद्यस्त्रीभारकर्मभिः।
क्रोधशोकभयैः क्लान्तान् श्वासहिध्मातिसारिणः।।
वृद्धबालाबलक्षीणक्षततृट्शूलपीडितान्।
अजीर्णाभिहतोन्मत्तान् दिवास्वप्नोचितानपि।।
धातुसाम्यं तथा ह्येषां श्लेष्मा चाङ्गानि पुष्यति।

(अष्टाङ्गहृदयम् - सूत्रस्थानम् - ७)

ग्रीष्मर्तोः ऋते इतरेषु ऋतुषु दिवास्वपनमहितमुक्तं कफपित्तवर्धकत्वात्। ग्रीष्मे तु लोके वायुः प्रबलो वर्तते, रौक्ष्यस्य च प्राधान्यं वर्तते स्निग्धत्वापेक्षया। स्वाभवतः एव रात्र्यः स्निग्धाः भवन्ति सौम्यत्वात्। सैषा रात्रिः ग्रीष्मे स्वल्पा एव भवति, सूर्योदयश्च इतरर्तुभ्यः शीघ्रमेव संभूयमानः दृश्यते। कारणत्रयेणानेन सर्वशः लोके शरीरे च रौक्ष्याभिवृद्धिर्दृश्यते, तदुपायत्वेन चात्र आयुर्वेदाचार्यैः दिवास्वपनमुक्तम्। इतरेष्वपि ऋतुषु ये दिवास्वपनार्हाः ते उच्यन्ते - मुक्त्वा त्वित्यादिना। भाष्ययानाध्वमद्यस्त्रीभारकर्मभिः क्रोधशोकभयैः क्लान्तानिति प्रसक्तोच्चैर्भाष्य-प्रयाणा-ध्वगमन-मद्यसेवन-ग्राम्यधर्म-भारवहनादिकर्मभिः क्रोधशोकभयादिमानसिकश्रमकारकैश्च भावैः क्लमान्वितान्। भाष्यादिषु क्रोधादिषु हि केचिद्भावाः वातवर्धकाः, केचित् पित्तवर्धकाः, केचिच्च वातपित्तवर्धकाः। श्वासहिध्मातिसारिणः कृच्छ्रश्वासहिक्काऽतिसाररोगग्रस्ताः। श्वासे हिध्मायां च प्राणवहस्त्रोतस्स्थं रौक्ष्यं दिवास्वपनचितेन श्लेष्मणा क्षीयेत। अतिसारिणः क्लमोद्भवः मलक्षयोद्भवश्च वातप्रकोपः दिवास्वप्नजश्लेष्मणा प्रशान्तिमियात्।

(अनुवर्तते.....)

## नवरात्रनायिकाः நவராத்திரி நாயகிகள்

### (महास्वामिनां वचःसमुद्धरणपूर्वकम्)

**Dr. S. THIAGARAJAN**
Department of Oriental Studies & Research,
SASTRA - Deemed to be Unviersity,Thanjavur

प्रतिवर्षं वयं नवरात्रोत्सवमाचरामः। तत्र दुर्गा, लक्ष्मीः, सरस्वती इति तिसृणां देवतानां पूजनं कुर्मः। तद्विषये महास्वामिनां किञ्चित् प्रतिपादनमस्ति। यथा -

नवरात्रोत्सवे पराशक्तिरूपां दुर्गापरमेश्वरीम्, महालक्ष्मीं, सरस्वतीदेवीं च पूजयामः। तामेकामेव पराशक्तिं त्रिमूर्त्तयः इति त्रयस्त्रिंशत्कोटिदेवाः इति वदामः। इदमेव सत्यं श्रीललितासहस्रनाम्नि परदेवतावर्णनावसरे सा एव सृष्टिं करोति (सृष्टिकर्त्री - ब्रह्मरूपा), सा एव परिपालयति (गोप्त्री - गोविन्दरूपिणी), सा एव संहारं करोति (संहारिणी - रुद्ररूपा) इति उच्यते। ललितास्वरूपेण, दुर्गास्वरूपेण या भवति पराशक्तिः सैव महालक्ष्मीस्वरूपा, सरस्वतीस्वरूपा अपि भवति। श्रीलक्ष्म्यष्टोत्तरसहस्रनामावल्यां ब्रह्मविष्णुशिवात्मिकायै नमः इति भवति। श्रीसरस्वती-अष्टोत्तरशतनामावल्यामपि इत्थमेव ब्रह्मविष्णुशिवात्मिकायै नमः इति भवति।

सृष्टिः, संहारः, संरक्षणमिति सर्वमपि कार्यम् एकैव शक्तिः करोति इति एतानि नामानि अस्मान् बोधयन्ति। एकैव पराशक्तिः विविधान् वेषान् धृत्वा नानाविधानि कार्याणि करोति। दुर्गारूपेण यदा भवति तदा वीर्यशक्तिप्रभृतीन् ददाति। महालक्ष्मीरूपेण सकलसम्पदः

ददाति। सरस्वतीरूपेण ज्ञानं ददाति।

आदिपराशक्तिं दुर्गां सामान्यतः पार्वत्या सह ऐक्यतां कर्तुं शक्नुमः। सा पार्वती हिमवतः पुत्री इत्यतः मलैमगल् (मलै - पर्वतः, मगल् - पुत्री) इति। महालक्ष्मी क्षीरसमुद्रे उद्बभूव इत्यतः अलैमगल् (अलै - समुद्रतरङ्गः, मगल् - पुत्री) इति। सरस्वती सकलकलां ज्ञानं च ददाति इत्यतः कलैमगल् (कलै - कला, मगल् - तद्ददाती बाला/स्त्रीरूपा) इति चोत्यते।

पर्वतराजपुत्रीरूपेण जाता लोकमाता, क्षीरसागरोत्पन्ना महालक्ष्मीः च द्वयोः महर्ष्योः पुत्रीरूपेणापि जनिमवापतुः। महालक्ष्मीं पुत्रीरूपेण पोषेयमिति चिन्तया भृगुमहर्षिः तपश्चकार। तदनुरुन्ध्य लक्ष्मीदेवी तस्य पुत्री उद्बभूव। भृगोः पुत्रीत्यतः (अपत्यं स्त्री इत्यतः) भार्गवी इति महालक्ष्म्याः नाम जातम्।

**भार्गवी लोकजननी क्षीरसागरकन्यका** इति अमरकोशः (संस्कृतशब्दकोशः) वदति। इत्थमेव कात्यायनमहर्षिः साक्षात् परमेश्वरी पुत्रीरूपेण वर्धनीया इति इच्छया तपश्चकार। परमेश्वरी तस्य महर्षेः पुत्रीति आंविर्बभूव। कात्यायनस्य (अपत्यं) स्त्री इत्यत एव तस्याः कात्यायनी इति नाम जातम्। दुर्गायाः गायत्रीमन्त्रे अपि तां कात्यायनी इति ध्यायामः इति उक्तमस्ति। लोकमाता इति ज्ञायमानानां देवतानां शिशुरूपेणावतरणे विशेषता भवत्येव। **शिशवो देवताश्चापि महोत्सवसमुत्सुकाः** इति वदामः। देवता एव शिशुरूपेण आयाति चेत् महदानन्दकारकः भवति। शिशवः अस्मादृशाः इव सुमूलाः काम-कोध-दुःखाः न भवन्ति। अस्मिन् क्षणे अत्याशया किञ्चित्

वस्तु स्वीकृत्य उत्तरक्षणे तद्वस्तु क्वचित् प्रक्षिपन्ति शिशवः। कोपोऽपि इत्थमेव झटिति नष्टो भवति। रोदनमपि एवमेव भवति। वयमेव अनुभूतीः मनसि संस्थाप्य चिन्ताग्रस्ताः भवामः। अनुभूतान् विषयान् अन्तः न स्वीकृत्य शिशवः इव वयमपि सानन्दाः भूयास्म। अत एव उपनिषदः अपि शिशुर्भव इति उपदिशन्ति।

साक्षात् पराशक्तिं कात्यायनीं, महालक्ष्मीं भार्गवीं च बालाः इति भावयित्वा तस्मिन्नेव भावे प्रार्थयामः चेत् अस्मभ्यमपि शिशुत्वं साक्षात्कृतं भविष्यति। अद्यत्वे Water Proof इति वदन्ति, तद्वत् काम proof, शोक proof इति भूत्वा वयं सर्वे शान्ताः भवेम। बालारूपाऽपि ज्ञानपयोदा श्रीमाता इयं देवी, अस्मान् कामशोकादिवर्जनाय अनुगृह्णाति एव।

बालारूपां कात्यायनीं तमिळनाडुराज्यग्रामीणाः अपि चिरान्नमन्ति इति मदूहः। कात्तायी इति ज्ञायमाना ग्रामदेवता कात्यायनी एव इति चिन्तयामि। भट्टारिका इति श्रीविद्योपासकैः महद्भिः वक्ष्यमाणां परमेश्वरीमेव अस्मद्ग्रामजनाः पिटारी इति भिटारिमान्यमिति वदन्ति। तत एव वयमिदं ज्ञातुं शक्नुमः। इत्थमेव ग्रामीणाः अपि सरस्वतीं चिरात्पूजयन्ति। पेच्चायी, पेच्चायी इति वक्ष्यमाणा ग्रामदेवता पेच्चु - वाक्, आयी - देवता इत्यर्थे वाग्देवीं सरस्वतीमेव सूचयति।

परमेश्वरीं, महालक्ष्मीं, सरस्वतीदेवीं च संपूज्य सर्वशक्तिं, सम्पदं, सद्बुद्धिं च प्राप्नुयाम।

(अनुवर्तते.....)

# HOLISTIC STUDENT-CENTRED EDUCATION IN THE GURUKULA SYSTEM: MODERN DEBATES

**Ms. APARNA RAJAGOPALAN**
Research Scholar, SCSVMV

## Introduction:

Countries all around the globe are anchoring themselves to their roots on education since they seem to have realized that education, to be successful, needs to be appropriate to the socio-economic and cultural context of the student/learner.Indigenous education systems were successful as they evolved from the reality of the socio-economic and cultural context of the society at that time and also addressed the complex developmental needs of the individual learner irrespective of the age. This twin focus of education systems like the Gurukula system of India, Te Whariki of New Zealand, Reggio Emilia approach of Italy etc. aimed to make every student (keeping in mind the individual's ability, personality and interests) a cherished member of the society. If an education system can address the individual's needs in the socio-economic and cultural context of his/her society, it becomes a student-centred and a holistic education system and the need of the hour in today's world is to research such systems; their tenets, philosophies and approaches and learn from them so as to initiate and engage the learners with best practices appropriate to the society.

As a step in this direction, this article briefly examines and introduces the modern debates and points of contention on the student-centred dimension ofthe

Gurukula System that flourished in the Indian sub-continent. These debates are usually centred around how the system compares with some modern educational thoughts especially in relation to cognitive attainment and customization & contextualization (the latter being a thrust area in modern educational systems).What is of note here is that much of these debates on the relevance of the Gurukula to the modern educational systemsare based on the descriptions and notions of the Gurukula system mentioned in the texts like the Vedas, Upanishads, Ramayana, Mahabharata and the Puranas.Such modern debates become significant because they help verify the effectiveness of Gurukula system in all its spatio-temporal dimensions and helps draw insights and inspiration to aspects that can be re-introduced to the contemporary educational system.

**Points of Contention on Student-Centredness of the Gurukula System**

The picture we get when we visualize the Gurukulas of yore is that of a sylvan 'forest-university' (Chidbavananda, 1964) where individuals, in the Brahmacharya phase of their lives, entered leaving behind their family's social status (princes and paupers were equal here thus hinting at the idea of social equality) and stayed together as a fraternity under the watchful eyes of the Guru and Guru-Patni. Such social equality also ensured that each of these students built the necessary social and the cultural capital in parallel to the educational capital needed for a life time to prosper in a society.

The Ashrama was self-sufficient in servicing the simple wants of the occupants and the mission of such an ashrama was to help students holistically develop themselves amidst nature. This residential system had the advantage of the Guru being able to observe his wards unobtrusively in all facets of their lives and thus, tailor his instruction according to the pupil. Along with formal instruction, students were also able to learn and practise their knowledge in the laboratory offered by nature in the Gurukula. This provided the Guru with umpteen opportunities to assess the students' assimilation of the instruction and decide on the curriculum most suited for a particular student's interests and abilities. The Guru-Patni and other residents of the Gurukula (not to forget the Guru himself) provided pastoral care and acted as foster parents to their wards during the tenure of the student's education. This holistic approach to education and character-building addressed all facets of the individual and was eminently suitable to the society of that time-period.

Modern scholars have deconstructed the student-centeredness of the Gurukula system and have questioned its effectiveness in the modern context based on a few variables of interest which are as follows.

In the Ashrama system, the first stage (roughly the first 8 years of an individual's life) is characterized by learning to live independently, the next stage is usually a time to acquire knowledge and a preparation for living a fulfilled life. In this stage known as the Brahmacharya Ashrama, students were sent for a period of

*gurukulavasam* or residence in the abode of the Guru. In modern times, there is a debate among scholars on what exactly was *gurukulavasam* and more importantly, what did it equip the student with. While some scholars believe that knowledge gained in the Gurukula was mainly restricted to memorization of religious texts and other religious matters (Seshagiri, 2010), others claim that the Gurukulavasam was more holistic and equipped students with both religious & spiritual knowledge (*Paravidya*) and knowledge of the world (*Aparavidya*) (Sreekala Devi & Pillai, 2012).

Another area of debate is whether the Gurukula system promoted only rote learning, based on the fact that texts were committed to memory (Seshagiri, 2010). The teacher is visualized as initiating all learning with students as passive receptacles of this knowledge. This is often compared negatively to modern educational thoughts like 'activity based learning' and 'student initiated learning' that are lauded for being student-centric. Contrary to this thought, the Brihadaranyaka Upanishad points to education as a trifold process comprising of *sravana* (hearing from the teacher), *manana* (assimilation by student through contemplation and reflection) and *nidhidhyasana* (concentrated contemplation of truth so as to realize it) (Sreekala Devi & Pillai, 2012).This idea makes education student-oriented with the Guru donning the role of a facilitator and resource person. Further, the students had to display *shraddha* or devotion & steadfastness to attain higher levels of learning putting them in charge of charting their own course of learning (Chidbavananda, 1964).

Similarly, flexibility and inclusion are also areas of debates which prove to be points of contention. However, they were hallmarks of the education philosophy prevalent in ancient Indian education. Extant literature suggests that there are two areas where such flexibility was very apparent: a) the age of entry into the Gurukulavasam and tenure of stay and b) the customization of teaching pedagogy based on ability and interest displayed by students. Sreekala Devi & Pillai (2012) state that the usual age of entry was the eighthyear of an individual's life; though it could extend up to the twelfth year, depending on the readiness of the student. The tenure depended on the purpose (usually related to the career choice of the student) and could range between twelve years (mastering one Veda) to forty-eight years (mastering all four Vedas).

The question of recognizing the diversity of differences in abilities and interest among studentsand being inclusive is addressed by the evidences available indifferent texts starting from the Vedas. Mookherji (1999) states that the Rig Veda points out that "*classmates or sakhas (those of same knowledge or who have studied the same Sastras) may have equality in the possession of their senses like the eye and ear, but betray inequality in respect of their power or speed of mind or the knowledge or wisdom which is attained by mind*" (pg 25-26). He goes on to say that students were divided into *Mahaprajnan* (high ability), *Madhyamaprajnan* (medium ability) and *Alpaprajnan* (low ability). The Gurus

accounted for this difference in abilities and customized the subjects and teaching methods according to the student's requirements. The latter included self-study, listening to Parishads or conferences of learned men, practical sensorial experience, question and answer sessions between teacher and student, fables & stories from texts like the Upanishads and so on depending on the subject and individual student (Avinashilingam, 1997). The question of holistic student centred development of the Gurukula system apart from cognitive achievement, is also addressed. The Gurukula system also catered to the students' overall well-being by catering to the affective needs of the individual, promoting physical education and engendering a sense of spiritual well-being. Mayr &Ulrich (2009) described six dimensions of well-being, which are: a) Making contact (forming secure relationships), b) Pleasure in exploration (environment is a safe base for exploring the world), c) Self- control/ thoughtfulness, d) Emotional stability, e) Self-assertiveness and f) Task orientation. The Gurukula system worked on similar principles to help students develop holistically along with their cognitive achievement. The Gurukulas were usually located in a secluded forest and provided controlled environments for the students to explore. The students, apart from their studies, also participated in other chores and thus, were already getting prepared for the responsibilities of adult life (Chidbavananda, 1964). The other inmates of the Ashram (the Guru-Patni, senior disciples of the Guru and so on) tended to the young wards and built strong relationships

that made the students feel secure and develop emotional stability. Peers, across class and geography, fostered a sense of equality and this help the student to develop assertiveness and confidence. Finally, concrete tasks set by the Guru helped develop the task orientation of the student and the positive discipline helped them to muster physical alertness and self-control. This overall physical and emotional well-being was conducive to the individual to gain a sense of spiritual well-being.

**Conclusion:**

In conclusion, the Gurukula system embedded itself and related its curriculum to the Socio-Cultural-Economic-Moral context of that era and hencethe different elements of pedagogy developed concerned itself with the holistic student-centred education.Understanding such holistic nature of the Gurukula system of that age, through the critical lens of modern educational paradigms and thoughts, especially aspects such as cognitive instruction, character building, customizing and tailoring such an education to the needs of the learner, pastoral care and affective development, physical development, sense of belonging, relationship with the natural world and social consciousness is crucial.Finally, it is important that we cull out the lessons that can be learnt from this system by today's education models, as appropriate to the philosophies and socio-cultural realities of this age.

# महाभारते मोक्षधर्मपर्वणि वेदान्तविचारः

## (मोक्षधर्मसाधनानि)

**Sri. K. KALIVARADHAN**
Research Scholar, SCSVMV, Kanchipuram

**मोक्षस्य विवरणम्ः**

प्रथमं मोक्षम् इति पदस्य कोऽर्थः इति द्रष्टव्यम् । व्युत्पत्या मोहं क्षयति इति मोक्षम् इति केचन वदन्ति । मुंच् इति धातोः धातुरूपमध्ये मुंचति मुंचते इति प्रयोगद्वयमपि दृश्यते मोक्षो मुक्तिः इत्यर्थे । वेदे अपि मोक्षो, मुक्तिः इति पदद्वयमपि समानार्थे प्रयुक्ताः । संसारबन्धनात् मुक्तिः इत्यर्थे मोक्षपदस्य अर्थावगमः सर्वासु उपनिषत्सु ब्रह्मसूत्रेषु च प्रयुक्तः ।

**बृहदारण्यकोपनिषदि** - याज्ञवल्क्येति होवाच यदिदँ सर्वं मृत्युनाप्तँ सर्वं मृत्युनाभिपन्नं केन यजमानो मृत्योराप्तिमतिमुच्यत इति होत्रर्त्विजाग्निना वाचा वाच्यै यज्ञस्य होता तद्येयं वाक्सोऽयमग्निः स होता स मुक्तिः सातिमुक्तिः । ३.१.३

**छान्दोग्योपनिषदि** स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय तमसस्पारं दर्शयति.... ।। ७.२६.२

**श्वेताश्वतरोपनिषदि** स विश्वकृद् विश्वविदात्मयोनिर्ज्ञः कालकालो गणी सर्वविद्यः । प्रधान क्षेत्रज्ञपतिर्गुणेशःसंसारमोक्षस्थिति बन्धहेतुः ।।

भगवद्गीतायामपि भगवान् श्रीकृष्णः वदति :

**जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।**
**ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ।। ७.२९**

**आत्मस्वरूपकथनम् :**

युधिष्ठिरः भीष्मं पप्रच्छ, आत्मा तर्हि कः ? भीष्मपितामहः आत्मनः स्वरूपं एवं विस्तरति :

**पूर्वं नित्यं सर्वगतं मनोहेतुमलक्षणम् ।**
**अज्ञानकर्म निर्दिष्टमेतत् कारणलक्षणम् ।। (२११.६)**

एष आत्मा अनादिः, सर्वव्यापी, मनसः कारणं, विना लक्षणं अव्यतिरिक्ते सन्नयमस्मच्छरीरात् अस्माकम् अज्ञानकर्मवशात् प्रतिष्ठितो इदं प्रपञ्चस्य कारणम् । अस्मिन्विषये अधुना भीष्मेन युधिष्ठिरंप्रति व्यासवाक्येन एवमुच्यते :

**शरीराद् विप्रयुक्तं हि सूक्ष्मभूतशरीरिणम् ।**
**कर्मभिः परिपश्यन्ति शास्त्रोक्तैः शास्त्रवेदिनः ।। (२५३.१)**

ये शास्त्रोक्तप्रकारैः कर्मकार्यं कुर्वन्ति ते निपुणाः शरीराद् विप्रयुक्तः तथापि सूक्ष्मतया शरीरे प्रविष्टः ब्रह्म परिपश्यन्ति । एतदेव सर्वासु उपनिषत्सु प्रमाणरूपेनोक्तम् । श्वेताश्वतरोपनिषद् प्रमाणं कुरुते -

**एको देवः सर्वभूतेषु गूढः सर्वस्यापि सर्वभूतान्तरात्मा ।**
**तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्।।**
**(६.११)**

शरीरं स्थूलमयं प्रत्यक्षस्वरूपम् । परन्तु एकैकस्य शरीरे मानवः जन्तवः च सर्वभूतेषु सूक्ष्मतया विद्यमानः प्राणहेतुः सः गूढस्थः एको देवः सर्वव्याप्यन्तरात्मा । आत्मस्थं तं ये विवेकिनः तेषां योगबलेन द्रष्टुम् शक्नुवन्ति ते शाश्वतसुखं प्राप्नुवन्ति, न तु इतरेषाम् ।

**बृहदारण्यकोपनिषदि - यत् साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरः.....** (३.४.१) इति. भगवान् शंकरभगवत्पादः तस्य भाष्ये यद् ब्रह्मसाक्षात् अव्यवहितं केनचिद् द्रष्टुरपरोक्षाद् अगौणम् न श्रोत्रं ब्रह्मादिवत्, किम् तत्? य आत्मा आत्मशब्देन प्रत्यगात्मोच्यते, तत्र आत्मशब्दस्य प्रसिद्धत्वात्, सर्वस्याभ्यन्तरः, शब्दाभ्यां प्रसिद्ध आत्मा ब्रह्मेति, तमात्मानं, मह्यं विस्पष्टं श्रृङ्गे गृहीत्वा यथा गां दर्शयति, तथा सोऽयमित्येवं कथयस्वेत्यर्थः । साक्षात् ब्रह्मैव एकैकस्य अभ्यन्तरः अन्तरात्मा स एव अस्माकं कार्यकरणसङ्घातः सच्चिदानन्दस्वरूपः इति प्रकटयति ।

(अनुवर्तते.....)

# The Self as the highest aim according to Vedântasiddhântamuktâvalî of Prakâúânanda

**Sri. SRIPATHY**
Research Scholar, Dept. of Sanskrit & IC, SCSVMV

Prakāśānanda in his work discusses the issue on the nature of Self only in accordance to his theory of dṛṣṭisṣṭiḥ and he is not concern about various other arguments regarding Self and Non-Self or other vedantic concepts which were already discussed elaborately by various authors. Prakāśānanda has no compromise in respect of Brahman and considered it as pure cit or vijñānaghana and even rejects the empirical existence (vyāvahārika) of the world and considered the entire world as illusory existent or a dream-like state (prātibhāsika). Though there are various theories in advaita vedanta and everybody accepts the non-dual nature of Brahman and also the oneness of Self and Brahman, Prakāśānanda, without any compromise on the point of the nature of vijñānaghana of Self and the prātibhāsika nature of the world is in a position to explain the Self as the highest goal. Though the Self is effulgent, pure bliss and unattached, it appears in the form of the manifold universe with its connection with the eternal nescience like rope-snake. In real, it is neither dual nor non-dual bur pure intelligence

alone. However, owing to the nature of pure bliss, the Self is the highest goal of man as all other pleasures are not equal to the blissful nature of Self. Therefore, attainment of that highest bliss or self-knowledge is the highest aim.

Here, some may raise the objection that the Self is not the highest goal; but on the other hand, pleasure and absence of pain must be the goals. Because, the Self can be neither bliss nor absence of pain as it is beyond the realm of space, time and causation. As the Self is the substratum of the world and illumines everything, it is called as eternal and imperishable. On this aspect, how can it be accepted as the highest human goal (upādeya)?[1] In other words, though the Self is eternal, etc., it cannot be accepted as the highest goal (anupādeya). The opponent further urges that the Self is eternal and has no possibility of destruction. Also, it cannot be comprehended as a thing since it is not a thing to be known through perception, inference, etc. If it is non-existent, then there cannot be any knower. It cannot be limited by assuming the quality of limitedness; because it is unlimited on account of time, space and thing.

[To be continued.....]

## भक्तिः - मोक्षसाधनम्

Sri. C. BADRINARAYANAN
Research Scholar, SCSVMV, Kanchipuram

उक्तोऽयमर्थः श्रीमद्भागवतेऽपि -

१.श्रुण्वतां स्वकथां कृष्णः पुण्यश्रवणकीर्तनः
हृद्यन्तस्थो ह्यभद्राणि विधुनोति सुहृत्सताम् ।।
नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया ।
भगवत्युत्तमश्लेके भक्तिर्भवति नैष्ठिकी ।।
भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे ।।

(भाग.१.२.१७२१)

२.सतां प्रसङ्गान्मम वीर्यसम्पदः
भवन्ति हृत्कर्णरसायनाः कथाः ।
तज्ञोषणादाश्वपर्गवर्त्मनि
श्रध्दावती भक्तिरनुक्रमिष्यति ।।

(भाग.३.२६.२५)

३.पानेन ते देव कथासुधायाः
विवृद्धभक्त्या विशदाशया ये ।
वैराग्यसारं प्रतिलभ्य बोधं
यथाऽञ्जसा त्वापुरकुण्ठधिष्ण्यम् ।।

( भाग. ३.६.२४)

४.मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ।।

(भाग. ३.२६.११)

इतोऽपि भक्तेः प्रदर्शनं नवविधमार्गैः कर्तुं शक्यते। भक्तेर्नवविधत्वमुक्तं भागवते यथा -

**श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।**
**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।।**
**इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।**
**क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ।।**

(भाग. VII. ५.२३२५)

**उपसंहारः**

**लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्।**
**अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे।।**

गङ्गानद्याः जलप्रवाहः यथा शताधिकान् बाधकान् दूरीकृत्य समुद्रं प्राप्स्यति, तथा भक्ताः श्रीमन्नारायणस्य कल्याणगुणान् श्रुत्वा आगम्यमाणं विघ्नं प्रतिहन्यमानाः, निष्काममनसा पुरुषोत्तमं प्राप्नुयुः।।

**नमो नाथ नमो नमस्ते नमो नमो राम नमो नमस्ते।**
**पुनः पुनस्ते चरणारविन्दं नमामि नाथेति नमन्सरेमे।।**

## नीतिद्विषष्टिका

**कटु रटति निकटवर्ती वाचाटष्टिट्टिभो यतस्तस्मात्।**
**अपसरणमेव युक्तं मौनं वा राजहंसस्य।। ११३**

**சிட்டுக் குருவி ஸமீபத்தில் இருந்துகொண்டு கர்ணகடோரமாகக் கத்துகிறது. ராஜ ஹம்ஸம் என்ன செய்யமுடியும். ஓடிப் போகலாம். அல்லது மௌனமாக இருக்கலாம்.**

# बालकथा - २

(वृद्धपितामही चिरन्तनीति नामधेयवती बालान् कथयति)

(चित्रम् - सु.श्री.इन्दु, Intern, SJS Ayurveda College, Chennai)

बालकाः उपश्रुण्वन्तु। किमपि कार्यं आचरन्ति चेत् बुद्धिपूर्वकं विचार्य कुर्वन्तु। एकदा फलितं व्यापारं दृष्ट्वा पुनः अविचार्य तथैव कुर्मः चेत् अनर्थ एव भविष्यति। अत्र कथाम् एकाम् उदाहरन्ति सन्तः। तत् कथयामि सावधानाः श्रुण्वन्तु।

पुरा कान्यकुब्जे विशुद्धमतिः इति एकः वणिक् आसीत्। सः कार्पासविक्रेता अभवत्। सः कान्यकुब्जात् नगरात् नगरान्तरं गत्वा कार्पासस्य विक्रयणम् अकरोत्। तदर्थं सः गर्दभान् एव उपायुङ्क्त। तस्य कार्पासाः जनैः बहुविधतया प्रशंसिताः। सः अपि गर्दभान् सम्यक् पालयति स्म। नगरयोः मध्ये नदीं तीर्त्वा एव प्रतिदिनं सः कार्पासान् नयति।

नद्यां जलस्य प्रवाहः कदापि भवति। प्रायशः रिक्तता एव भवति। अतः सः वणिक् रिक्तां नदीं सुलभतया तीर्त्वा अन्यं नगरं गत्वा स्वव्यापारम् अकरोत्। एकदा महती वृष्टिः अभवत्। तदा नद्यां जलाप्लवः अभूत्। तदा गर्दभः जलप्रवाहमध्ये कार्पासभारं वहन् अगमत्। नदीतरणात् परं

जलार्द्रतया कार्पासः भारयुक्तः समभूत्। तेन कार्पासस्य भारः वृद्धः। तस्य विक्रयणवेलायां धनम् अधिकतया अलभत। तेन सन्तुष्टः सः वणिक् गर्दभस्य इष्टम् आहारं दत्वा तं सदकरोत्। गर्दभः अपि स्वस्य कृत्येन स्वामिनः लाभं दृष्ट्वा अत्यन्तं सन्तुष्टः अभवत्।

पुनः एकस्मिन् वारे सः वणिक् लवणव्यापाराय सन्नद्धः अभवत्। अतः लवणभारं गर्दभस्य पृष्ठे समारोप्य गतवान्। नद्यां जलाप्लवः एकत्र आसीत्। पूर्वसंस्कारेण गर्दभः स्वमेव लक्ष्यस्थानं प्राप्नोतीति मत्वा वणिक् तं त्यक्त्वा पूर्वमेव नगरान्तरम् अगमत्। तदा गर्दभः एवमचिन्तयत् - पूर्वं भारस्य जलार्द्रतया स्वामिनो लाभः अभवत्। इदानीमपि तथैव कुर्मः चेत् यजमानः मां सत्करिष्यतीति। एवं चिन्तयन् सः गर्दभः जलप्रवाहे लवणभारेण सहितः अमज्जयत्। जलप्रवाहे लवणभारः जलाप्लावितः लीनोभवत्। नदीं तीर्त्वा गर्दभः वणिजः पार्श्वं अच्छत्। तदानीं लवणभारं रिक्तं दृष्ट्वा कुपितः वणिक् तं प्राहरत्। गर्दभः कारणं अजानन् दुःखितः अभवत्।

बालाः अपि दृष्टं, बुद्धिपूर्वकं कृतम् एव कार्यं फलं जनयति। समानमपि कार्यं अबुद्धिपूर्वकं कृतं नाशयति। अतः कार्याणि सम्यग्बुद्ध्या विचार्य कुर्वन्तु।

## नीतिद्विषष्टिका

**आरोग्यं विद्वत्ता सज्जनमैत्री महाकुले जन्म।**
**स्वाधीनता च पुंसां महदैश्वर्यं विनाप्यर्थैः।। ११४**

**தேஹ ஆரோக்யம், படிப்பு, ஸஜ்ஜனங்களின் ஸ்நேஹம், ஸத்குலத்தில் பிறப்பு, பராதீனமில்லா-திருப்பது, இவை பணமில்லாமலேயே பெரும் பாக்யம்.**

# पदरञ्जनी - १६

**Dr. N. SRIDHAR,**
Srinivas Fine Arts Pvt Ltd. Chennai - 31

(अस्य समीचीनमुत्तरं editorsamskritasri@gmail.com प्रति ई-मैल् कर्तुमपि शक्नुवन्ति। समीचीनोत्तरप्रदातॄणां नामप्रकाशनम् अग्रिमसञ्चिकायाम्।)

**वामतः दक्षिणम्**

१. जटा (२) ३. धनादिगर्वः(४)

५. कुठारः (४) ८. स्वामी (तस्य पर्यायवाची संबोधने) (२)

९. होमार्थं परिष्कृता भूमिः, अङ्गनम् (२)

११. विद्वान् (२)
१२. नीतिः (२)
१३. अतिक्रमः (४)
१६. आशाहीनः (३)
१७. चक्रं पाणौ यस्य सः (४)
२१. मयूरः, यज्ञः (४)
२२. बाणः (३)
२४. तुलसी (३)
२६. शय्याः पिता (३)
२७. केशविन्यासः (३)
२९. गर्भाशयः, कलळः (३)
३०. रागः, रसविशेषः (३)
३१. अन्नम् (२)
३२. अन्यत्, केवलम्, सङ्ख्याविशेषः (२)
३४. बलीवर्द्दः, ऋषभः (२)
३५. शरीरम् (२)
३६. कालः, अवधिः, प्राकारः (२)

**उपरिष्ठात् अधः**

१. उत्तमः (३)
२. नरकः (२)
३. नीचं, तलम् (२)
४. लेखकः (२)
६. शुक्राचार्यः (३)
७. निवासः, आश्रयः, वातरहितः (३)
९. वप्रं, समूहः, प्राकारस्य आधारः (२)
१०. आदिः, समाप्तिः, निदर्शनम् (२)
१२. वल्मीकः, पर्वतः (२)
१३. न जप्यते नोच्चार्यतेऽसौ, हंसमन्त्रः (३)
१४. रक्षिता (२)
१५. नरकविशेषः, कुम्भीपाकः(४)

१८. पूगः, पूगीफलं (३) १९. अकस्मात् (३)

२०. भगिनी (२) २१. विभीषणस्य पत्नी (३)

२३. कुबेरः (४) २४. पित्तलं, सुष्ठु लोहमिव (४)

२५. निर्झरः (२) २७. सूर्यः, अग्निः (३)

२८. आयुः (२) २९. जि धातुः, लोट् उ.पु. बहु.व. परस्मै

३२. अयम् (२) ३३. सीतापतिः (२)

## पदरञ्जनी - १५ (उत्तराणि)

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| आ[1] | मम् | | शां[2] | | ना[3] | न | लां[4] | कः | |
| ह | | सु[5] | श | ति | | | च | | त[6] |
| की[7] | रः | | ति | | कु[8] | रा | कः | | स्वीः |
| | | ष्णः[9] | | क[10] | टः | | | हु[11] | |
| प[12] | क्तिः | | क्षा | | प[13] | द्म | रा | गः | |
| त्व | | म[14] | हः | | ज[15] | नः | | स | |
| लम् | | हा | | त[16] | टी | | क[17] | हः | |
| | क[18] | कु | ज्ज | लः | | ख[19] | टः | | स्व[20] |
| कु[21] | ला | लः | | | सु[22] | रः | | न[23] | स |
| त | | | अ[24] | भि | धा | | स[25] | प | लः |
| प[26] | वि[27] | त्र[28] | कः | | क[29] | न्या | दा | नम् | |
| | क्ष[30] | पा | | चा[31] | रः | | यो | | फ[32] |
| त[33] | तः | | प[34] | टुः | | | गी[35] | वां | णी |

# साहित्यचित्रम्

(शिल्पम् - एल्लोरातः)

पौलस्त्यपीनभुजसम्पदुदस्यमान कैलाससम्भ्रमविलोलदृशः प्रियायाः।
श्रेयांसि वो दिशतु निह्नुतकोपिचिह्नम् आलिङ्गनोत्पुलकमासितमिन्दुमौलेः।

उदात्तराघवम्

Registration with Registrar - News Paper of India 30478 / 77

SAMSKRITASRI

Printed by: Zigma Graphics, 9/1, Thirtharappan Street, Triplicane - 5

Edited and Published by Sri S. Srinivasa Sarma on behalf of the Samskrit Education Society (Regd.)

Old 212/13-1, New No, 11, St. Mary's Road, R.A. Puram, Chennai - 600028.